॥ भिक्षुकोपनिषत् ६३ ॥

भिक्षूणां पटलं यत्र विश्रान्तिमगमत्सदा ।
तन्त्रैपदं ब्रह्मतत्त्वं ब्रह्ममात्रं करोतु माम् ॥

ॐ पूर्णमदः पूर्णमिदं
पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय
पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथ भिक्षूणां मोक्षार्थिनां
कुटीचकबहूदकहंसपरमहंसाश्चेति चत्वारः ।
कुटीचका नाम गौतमभरद्वाजयाज्ञवल्क्यवसिष्ट -
प्रभृतयोऽष्टौ ग्रासांश्चरन्तो
योगमार्गे मोक्षमेव प्रार्थयन्ते ।
अथ बहूदका नाम त्रिदण्डकमण्डलुशिखा -
यज्ञोपवीतकाषायवस्त्रधारिणो
ब्रह्मर्षिगृहे मधुमांसं वर्जयित्वाष्टौ
ग्रासान्भैक्षाचरणं कृत्वा
योगमार्गे मोक्षमेव प्रार्थयन्ते ।
अथ हंसा नाम ग्राम एकरात्रं नगरे पञ्चरात्रं
क्षेत्रे सप्तरात्रं तदुपरि न वसेयुः ।
गोमूत्रगोमयाहारिणो नित्यं चान्द्रायणपरायणा
योगमार्गे मोक्षमेव प्रार्थयन्ते ।
अथ परमहंसा नाम संवर्तकारुणिश्वेतकेतुजडभरत -
दत्तात्रेयशुकवामदेवहारीतकप्रभृतयोऽष्टौ
ग्रासांश्चरन्तो
योगमार्गे मोक्षमेव प्रार्थयन्ते ।
वृक्षमूले शून्यगृहे श्मशानवासिनो वा
साम्बरा वा दिगम्बरा वा ।
न तेषां धर्माधर्मौ लाभालाभौ
शुद्धाशुद्धौ द्वैतवर्जिता समलोष्टाश्मकाञ्चनाः
सर्ववर्णेषु भैक्षाचरणं कृत्वा सर्वत्रात्मैवेति पश्यन्ति ।
अथ जातरूपधरा निर्द्वन्द्वा निष्परिग्रहाः
शुक्लध्यानपरायणा आत्मनिष्ठाः प्राणसंधारणार्थे
यथोक्तकाले भैक्षमाचरन्तः शून्यागारदेवगृह -

तृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदीपुलिन -
गिरिकन्दरकुहरकोटरनिर्झरस्थण्डिले तत्र ब्रह्ममार्गे
सम्यक्सम्पन्नाः शुद्धमानसाः परमहंसाचरणेन
संन्यासेन देहत्यागं कुर्वन्ति ते परमहंसा नामेत्युपनिषत् ॥

ॐ पूर्णमदः पूर्णमिदं
पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय
पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति भिक्षुकोपनिषत्समाप्ता ॥